

# सुरेश्वरवार्तिकपरीक्षा ।

श्रीः

जयसच्चिदानन्द

श्रीमत्परमहंस परिव्राजकाचार्य्यवर्य स्वामि स्वयंप्रका-
शानन्द सरस्वती पूज्यपाद शिष्य परमहंस
परिव्राजक कैवल्यधाम मठनिवासि प्रज्ञा-
नानन्द सरस्वती स्वामि कृता ।

---

प्रत्यग्ध्वांतसमुच्छेदिज्ञानमैकात्म्यनिष्ठितम् ।
संन्यास साधनंप्रोक्त ममृतत्वैक साधनम् ॥

श्रीकाश्यां

दुर्गायन्त्रालये मुद्रयित्वा प्रकाशिता ।



॥ श्रीः ॥

# सुरेश्वरवार्तिकपरीक्षा.

## जयसच्चिदानन्द ।



अथमङ्गलम् ।

यः शंकरः सकलवेदरहस्यवक्ता बुद्धादि
बुद्धितमसांखलु चण्डभानुः ॥ अभ्युद्द
धार विगलच्छ्रुति मार्ग मद्धा भूमण्डले
विजयते यतिसार्व भौमः ॥ १ ॥

चित्रमेतद्यच्छ्री जगद्गुरूणां समक्षएव तच्छिष्योभूत्वापि, तैः पराजितोपि तत्ख ण्डनंलिखितंसुरेश्वरेण, त्रयाणामपिवर्णा

नांश्रुतौसंन्यासदर्शनात्॥ इत्यसंभवरूपं
तदाकिमाचार्य्योजितः किंवाऽऽचार्य्येण
सजितइतिमहदाश्चर्य्यं, किमाचार्य्येण ना
ज्ञायिसाश्रुतिर्यया ब्राह्मणेतरस्यापि सं
न्यासोविहितः, ममनसितुनसमीचीनं
भाति यदेतद्वार्त्तिककारेणलिखितमस्ति,
किंतुकेनचिद् ब्राह्मणेतरेण गिरिणाप्रक्षि
प्तं स्वस्यसंन्यासप्रामाण्यार्थं, भाति, न
हिपूर्वापरविरुद्धमसंगतंश्रुति भाष्यमन्वा
दिस्मृतिविरुद्धं बुद्धिमतासुरेश्वरेण लेख
यितुंशक्यते, किंविरुद्धलिखितमाचार्य्ये
णनखण्डितं, तत्समये, तदानखण्डितंचे
दाऽऽचार्य्यएवजितइतिमन्ये, तदावार्त्ति

ककारस्य, शिष्यत्वमनुपपन्नं, लोके शा
स्त्रेचशिष्यएव जगद्गुरोरितिप्रसिद्धम् ॥
पूर्वमीमांसादिविषयेतंजित्वा, अवतारो
भूत्वा जगद्गुरुर्भूत्वा, संन्यासविषयेजि
तइतिमहदाश्चर्यं, किञ्चसाश्रुतिःका या
त्रयाणामपिवर्णानांसंन्यासंविदधाति, ब्र
ह्मचर्यंसमाप्यगृहीभवेद्गृहीभूत्वा वनीभ
वेद् वनीभूत्वाप्रव्रजेदितिचेत् तन्नसंभव
ति, सातुश्रुत्यादिभिः प्राप्ताधिकारस्यब्रा
ह्मणस्यैवाऽसम्यग्विरक्तस्य क्रमेणसंन्या
संविदधाति ब्राह्मणाः प्रव्रजन्ति ब्राह्मणा
भिक्षा चर्य्यं चरन्ती त्यादि तस्यैव
विधानमुचितं, नहिक्षत्रियादयोभिक्षाच

यैंचरन्तीतिवक्तुंशक्यते, आपत्कालाऽति रिक्तकालेतेषांभिक्षाद्यन भिधानात् नहि संन्यासस्तेषामापत्कालः। अतएव, अ नयाश्रुत्यातेषांसंन्यासोऽस्तीतिननिश्चेतुं शक्यते, द्विजादिपदाभावात प्रमाणादि विनिगमनाभावाच्च, श्रुतौ ब्राह्मणपदमि तरेषामुपलक्षकंचेत्तर्हि त्रयाणामपिवर्णा नांश्रुतौसंन्यासदर्शनादिति स्ववाक्यविरो धात, नहिसाक्षच्छ्रुतिप्राप्तेनोपलक्षणंसं भवति, तस्मात्प्रक्षिप्तमिदं, वार्तिकमन्ये, तथापिदृढ निश्चयार्थं, श्रीमत्परमहंसपरि व्राजकाचार्य्य वर्यकृष्णानंदसरस्वतीस्वा मिनां पूज्यपादानांगुरूणांनिवेदितं भग

वन्? ममम नस्येकाशंकाजातातांनिवारय, तैरुक्तंकाशंका तांकथय, मयानिवेदितं, स्वामिन् किंजगद्गुरुर्जितोवार्तिककारो वा, तैरुक्तंजगतिप्रसिद्धं जगद्गुरुणावा र्त्तिककारएवजितोऽस्ति, मयोक्तंतर्हिकथं गुरुविरुद्धं श्रुतिस्मृतिविरुद्धं वर्णत्रयाणां सन्यासं सुरेश्वरोलिखतिस्म, तर्हि किं वार्त्तिककारःसर्वज्ञोजगद्गुरुर्वा, तैरुक्तंन हिनहिवार्त्तिककारः सर्वज्ञोभवितुमर्हति, शिष्यत्वाद्, श्रीशंकराचार्य्यएवसर्वज्ञो, गुरुत्वाच्छङ्करावतारत्वा दार्षवचन प्रामा- ण्या, तर्हिकिंनिश्चयंब्राह्मणस्यैव, नत्रयाणा मपिसंन्यासोऽस्ति, तैरुक्तमिदंप्रक्षिप्तमे

व श्रुतिस्मृत्यादिविरुद्धत्वात, नह्यीदृशो लेखोवार्त्तिककारस्य संभवति, गुरुसम क्षेदर्शितत्वादपि तथा प्रक्षिप्तकथनानंत रंतैःकृपया, प्रक्षिप्तत्वेयुक्तयोपिप्रदर्शिता स्तास्तत्रतत्रदर्शयिष्ये. तथाहिसचविरो धइत्थं, प्रथमतस्तदाशयं प्रकटयति; ये नत्रयाणां संन्यासोलिखितः ॥ पारि व्राजकविधायक श्रुतौ, ब्रह्मचर्याद्याश्रम त्रयविधायकश्रुतौच, उद्देश्यावच्छेदकव्या पकतासंबंधेन, विधेयताऽन्वयइति शा स्त्रमर्यादायांसत्यां.यत्रतदाश्रमत्रयं,तत्रसं न्यासविधेयतासिद्धा, वर्णत्रयेप्याश्रमत्रयं तस्माद्वर्णत्रयेपि संन्यासाश्रमप्राप्तिरि

ति ॥ तदाशूद्रस्यापिसंन्यास प्राप्तिस्त
स्याप्याश्रमत्वाच्चतुर्णामाश्रमत्वे स्ववच
नविरोधाच्च किञ्चतेननेदं चिंतितंयद्
ब्राह्मणत्वव्याप्याश्रमत्रयंतस्यैवमुख्यत्वा
च्छमादिप्राधान्याच्चसंन्यासः काषायधा
रणं दण्डधारणं गुरुत्वंस्वामित्वं प्रेषमंत्रो
च्चारणंच तस्यैवच श्रुत्यादि षुविहित
त्वात् प्रमाणप्राप्तत्वाच्च अतएव ब्रा
ह्मणाः प्रव्रजन्तीतिश्रुतिः संगच्छते अ
न्येषां चेत्तर्हि द्विजाः प्रव्रजन्ति द्विजाभि
क्षाचर्यं चरन्ति इति कथंनश्रुत्याउक्तं
परिसंख्यार्थं, नोचेद् ब्राह्मणग्रहणं व्यर्थं
स्यादिति तस्मादेव नब्राह्मणपदं वर्ण

त्रयोपलक्षकं तस्माद्वर्णत्रये संन्यास प्राप्तिः। नापिश्रुतिविरोधः। श्रुत्यन्तरै क्यत्वात् अतएववनाश्रममात्रेण संन्यास सिद्धिः। नापिकेवलजातिमात्रेण संन्या ससिद्धिः। आश्रम त्रयान्यतम मूलत्वा त्संन्यासस्या ऽऽश्रमत्रयान्यतम समाना धिकरण शमादिसहितं ब्राह्मणस्यसंन्या सहेतुः श्रुतिस्मृतिभाष्यादि मूलत्वादिति मिलित्वा संन्यासहेतुरिति अतएव श्रुतौ ब्राह्मणग्रहणं सफलम् ॥ महाभारतस्थो दाहरणातितुल्यागपर्य वसितानिन संन्या सविषयाणिकिञ्चयथासंन्यासविषये क्षत्रि याउदाहृतास्तथावैश्याः केपिनोदाहृतास्त

स्मात्त्यागविषयाण्येवोदाहरणानि नसंन्या
विषयाणियतोगीतायामपि संन्यासत्याग
विभाग श्रवणात प्रेषमंत्रोच्चारण पूर्वकं
विधिनासर्वकर्मत्यागः संन्यासः केवलंफ
लमात्रत्यागोहित्याग इतिगीतावाक्या
र्थः त्यागेक्षत्रियादयोप्यधिकारिणो, ज
न्मान्तरसंस्कारात संन्यासेतुशमादिस्व
भावत्वाद्ब्राह्मणएव शमादिसंपन्नः। त
स्माच्छास्त्रविरुद्धंवर्णत्रयसंन्यासचिंतनं।
इदमपिचित्रंयत प्रत्यगात्मत्वमात्रेण सं
न्यासाश्रमकथनं पश्वादिष्वपिप्रत्यगात्म
त्वात् यतःसंन्यासोत्तरंप्रत्यगात्मविचारः।
जातिपूर्वकं गुणकर्मणोः संन्यासे ऽसाधा

रणोहेतुः प्रत्यगात्मत्वस्यसाधारणत्वात्॥ सर्वेष्वाश्रमेषुगुणकर्मप्राधान्येन जातिंवि हाय संन्यास विधानंचेत्तर्हिवर्णसंकरताप त्तिः। पृथक् २ वर्णाश्रमधर्मगुणकर्मप्रति पादनमपिशास्त्रेष्वसंगतंस्यात्। यथाश मादिप्राधान्यंब्राह्मणः शौर्यप्राधन्यं क्षत्रि यो व्यापारगोसेवाप्राधान्यं वैश्यः। व र्णत्रयसेवाप्राधान्यश्शूद्रइति किञ्चभीष्मः क्षत्रियः सन्नपि विष्णुसहस्रनाम फलक थनप्रसंगे ब्राह्मणेतरस्य मोक्षाधिकारमु पनिषदधिकारञ्च वाधतेस्म यथा वेदा न्तगोब्राह्मणः स्यात् क्षत्रियोविजयी भवे दित्यादि तस्मादेवनब्राह्मणे तरस्य सं

न्यासः किञ्चयदिब्राह्मणे तस्य संन्या
सोऽभविष्यत्तर्हि क्षत्रियवैश्यौ लोकेन्नम
स्यौ श्राद्धभोजिनावपि स्यातां विष्णुतनू
त्वाभावात् ननमस्यौ अविद्योवासविद्यो
वाब्राह्मणो ममकीतनू इतिप्रमाण विरो
धाच्च तस्मान्नक्षत्रियवैश्यौ संन्यास यो
ग्यौननमस्यौच किञ्चब्राह्मणस्य शमादि
युक्तस्यचरमजन्म त्वादपितस्यैव संन्या
सः तथाचोक्तं भगवता वहूनांजन्मना
मन्तेज्ञानवान् मांप्रपद्यते ॥ वासुदेवः
सर्व मितिसमहात्मासुदुर्लभइति संन्य
स्य श्रवणं कुर्यादिति प्रमाणादन्येषां
वेदान्तश्रवणमपि नप्रधानं ब्राह्मणस्यस

वैंथाशुचित्वात् संन्यासाधिकारी ब्राह्मणाः पुण्याराजर्षय इति वहुजन्मसंस्कारात्स्या गिनः पापयोनित्वात् तु वैश्यादीनां स वंथा एवाऽधिकारो नास्ति संन्यासे स तुपापक्षयार्थं नामस्मरणं कुर्यात् येपि स्युः पापयोनयः तेपियांतिपरांगतिंपरं परयाइत्युक्तत्वात् किञ्चयदिक्षत्रियादी नां संन्यासो ऽभाविष्य त्तदामनुमांधाता रामजनककृष्ण प्रभृतयः क्षत्रियाः कथं न संन्यासं चक्रुस्त स्मात्त्यागिनो न सं न्यासिन एवंकेपि वैश्याइति अतएवच क्षात्रयोनिः शस्त्रं ब्राह्मणयोनिः शास्त्रं तस्मादेवाऽध्या पनं कर्मब्राह्मणस्यैव त

स्मादेवगुरुत्वमाचार्य्यत्वञ्चेति यावैश्यो
सातुला याशौद्री सादासी तस्मादेव नक्ष
त्रियाणां वैश्यानां चप्रैषोच्चारणपूर्वकं ब्र
ह्मीभूतस्येति संकल्पः। ब्रह्मीभावस्ययो
न्यधीनत्वात् तस्यतत्संस्काराधीनत्वात्
पूर्वंब्राह्मणजन्मसंपाद्य ब्रह्मीभूतस्येति सं
कल्पं संपादयिष्यन्ती तिनिर्विवादः पक्षः
श्रुतिरहस्यविदामिति। तस्मादेवसंन्या
सेसति तदुत्तरंकर्मानधिकारान्मुण्डनं च
प्राप्तंसशिखं तथातस्यैवाचार्य्यत्वं गुरु
त्वंञ्चप्राप्तं॥ अतएवप्रणवाङ्गएकदण्डः।
मुखजत्वाच्च प्राधान्यं तस्यैवसंन्यासः
तथाचस्मृतिः॥ मुखजानामयंधर्मो य

द्विष्णोर्लिङ्गधारणम् । वाहुजातोरुजा
जातानां नायंधर्मोविधीयते इति तस्मा
देवक्षत्रियादीनां संन्यासविषये श्रुतिर्ना
स्ति स्मृतिरपि नास्ति तेषांवाहुजातो
रुजातत्वात् । ततएव विष्णुलिंगधारण
रूपः संन्यासोपिनास्ति मुखजत्वाभावा
त् किञ्च क्षत्रिय वैश्ययोस्त्रिष्टुब्जगत्य
धिकारिणोर्ग्यार्हत्यभावात् । नसंन्यासाधि
कारः । गायत्र्यभावाद्गायत्री प्रवेशाभा
वाच्च गायत्र्यधिकार पक्षेपि त्रयोद्वावि
तिनियमवंधः ॥ स्मृतौसनातन इति पा
ठेपिनतयोः संन्यासलाभः सनातनत्वा
त्परंपराश्रुति स्मृत्यादिप्राप्तत्वाद् ब्राह्म

णस्यैव संन्यासाऽधिकारः। मनुस्मृतिवि
रोधादपि नसंन्यासः चत्त्वार आश्रमाः
प्रोक्ताब्राह्मणस्यैव त्रयः क्षत्रियस्य द्वौवि
शइतिसर्वप्रमाणेभ्यः श्रुतेर्बलवत्त्वात्तद्वि
रुद्धोन्यायोपिनबलवत्त्वे हेतुः । तस्माद्
ब्राह्मणस्यैव संन्यासः ॥ किञ्चभीष्माजा
तशत्रुरामजनक कृष्णप्रभृतयः कस्मा
न्नपारि ब्राज्यंचक्रुः कथंच याज्ञवल्क्य
एवप्रवव्राज किंचश्रुतिरपिकथंस्पष्टतया
याज्ञवल्क्यस्यैव संन्यासंदर्शित वतीना
न्येषामित्यपि ब्राह्मण संन्यासस्य बल
वत्त्वे हेतुः । तस्माच्छास्त्रबाधापेक्षया
आश्रमभ्रमबाधस्यौ चित्यात् । त्रयाणां

वर्णाना मुपनयन समयालिंग भेदोपिद र्शितः काषायं ब्राह्मणस्य मांजिष्ठंक्षत्रि यस्य हारिद्रं वैश्यस्यइति गृह्यसूत्रे त स्मादपि नक्षत्रिय वैश्ययोः संन्यासः य द्दिकाषायादि लिंगव्यक्तस्थार्थं वर्णभेदां गीकारस्तदा निरस्तं ब्राह्मण शब्दवाच्य त्वं क्षत्रिय वैश्ययो स्तदा ब्राह्मण ग्रहणे न गतमुपलक्षणमपि किञ्चकाषायदण्ड मारोपियतिः पूज्योयुधिष्ठिर इति भीष्म वचनेनापि काषाय दण्डसारो ब्राह्मण एव नेतरेषां काषायसारत्वं तेषामपूज्य त्वमपि तस्मादपि नेतरेषां संन्यासः क्ष त्रिय संन्यासो नाम युद्धेऽभिमुखमरणं

वनवासोवा वानप्रस्थवृत्त्यातनुं त्यजेदि ति । शस्त्रमेवतस्यदण्डोनवेणुदण्डः त स्मादौपानिषदज्ञाने संन्यासेच ब्राह्मणए वाऽधिकारी संन्यस्यश्रवणं कुर्यादिति व चनात् । किञ्च ब्राह्मणशब्द एवव्याक रोत्यधिकारं ब्रह्मशब्दात्तस्येद मित्यणि ब्राह्मणशब्दनिष्पत्तिः । तस्माद्योनिवि शेषोब्रह्मतस्याऽयं ब्राह्मणः । ब्राह्मणो मामकीतनू इति प्रमाणात् । योनिमहि म्नाशास्त्रयोनेर्ब्रह्मणस्तादात्म्य संबंधः । तपः श्रुताभ्यांतदधिगमस्तदा ब्राह्मणयो निः सफलाब्राह्मणवीर्यपुरःसरंब्राह्मण्यञ्च सफलम् । तस्मात् तस्यैवशमादियुक्तस्व

भावस्यसंन्यासः केवलगुणतो ब्राह्मणांगी कारे सापिण्ड्योच्छेद प्रसंगात् । तस्मा ज्जातिब्राह्मण एवात्रब्राह्मण शब्दार्थः । ब्रह्मजानाति ब्राह्मण इति स्वीकारे संस्का राभावे जात्यभावे नब्रह्मज्ञानं संभवति संस्कारत्वे ब्राह्मणत्वं ब्राह्मणत्वेसंन्यासः संन्यासत्वे वेदान्त श्रवणंतदा ब्रह्मज्ञाने न ब्राह्मणत्व मितियौगिकार्थः संभवति प्रथमत एवयौगिकार्थत्वे शूद्रादीनामपि ब्राह्मणत्वापत्तिः । तदाशूद्रादिशब्दाभाव प्रसंगात् तस्मान्मुखजत्वात् । ब्राह्मणजा तौसंन्यासो ज्ञानांगम् ॥ मुखस्यज्ञानं कर्म व्याख्यानादि द्वाराक्षत्रियाणां वाहुजत्वा

च्छस्त्रादिप्रहारस्वरूपं कर्मयोनि स्वभावाद्
पिब्राह्मणएवसंन्यासी किञ्चविजिगीषाक्ष
त्रियस्वभावो विविदिषाब्राह्मणस्वभावः।
जिघृक्षावैश्यस्वभावः। दास्यंशूद्रस्य स्त्री
णाञ्च तस्मान्मुखजत्वाद् ब्राह्मणस्यैवस
न्यासरूपः सनातनधर्मः श्रुतिस्मृतिभा
ष्यवार्त्तिकपुराणादिषु दर्शनात ॥ मुख
स्यज्ञानप्रधानत्वात् मुखेनैवाशिष्यं प्रति
तत्त्वोपदेशो भवति सचब्राह्मणधर्मः,।
उपदेष्टृत्वाद्गुरुत्वं गुरुत्वात्संन्यासोज्ञा
नाङ्गमतो ब्राह्मणस्यैव संन्यासे ऽधि
कारो नान्येषामितिनिर्णीतो निर्विवादश्च
तत्वदृशामिति वाहुजातोरुजातानां क

मेंप्राधान्याद पूज्यजातावुत्पन्नत्वाच्च न कर्मत्यागरूपः संन्यासः संभवति किञ्च क्षत्रियस्यशस्त्र योनिरत एव भीष्मो वसुष्वलीयत सशस्त्रकरः ॥ जडभरतोपि तृतीये जन्मनि ब्राह्मणत्वं लब्ध्वामुक्तोबभूव, तस्माज्जाति ब्राह्मणानामेवाधिकारः काषायदण्डधारण प्रेषमंत्रोच्चारणादिलिंगेसंन्यासे ॥ अद्यापि ब्राह्मणजातिष्वेवशिष्टेषु प्रेषोच्चारणपूर्वकंदण्डकाषायवस्त्रधारणंदृश्यते, शिष्टैश्च ब्राह्मणेष्वेवसंन्यासोदीयतेच नान्येषां, तस्माद्ब्राह्मणस्यैव काषायदंडधारणरूपः संन्यासइतिसिद्धः ॥

जगज्जेताशश्वद्गुरुरितिसुविख्यात महिमाश्रुतीनांमर्मज्ञोहृदय मखिलं शिष्यनिवहे ॥ वितेनेतत्राऽयंगुरुमतविरुद्धंकथमहोत्रयाणांसंन्यासंकथ यतुसुरेशोऽतिनिपुणः ॥ १ ॥ आचार्य्योविश्वपूज्यो पिजगज्जेतापि शंकरः ॥ नोत्तरंप्रददौचित्रमेतत्तेनापिकिंकृतम् ॥ २ ॥ मण्डनंमुण्डयामासजित्वाशंकरभारती ॥ तंगुरुंजेतुकामस्यकथंशिष्यस्यशिष्यता॥३॥ शंकराचार्य्यवर्यायसच्चिदानन्दमूर्त्तये नमःशान्तायगुरवेब्रह्मणेपरमात्मने४

इतिश्री प्रज्ञानानन्दसरस्वतीस्वामिकृता सुरेश्वरवार्त्तिकपरिक्षा समाप्ता।